## १९३४

## जयपुरराजकीय—साहित्योपाध्यायपरीक्षायाम्

## चन्द्रालोके प्रश्नाः ।

### तृतीयं पत्रम् ।

१—कवितāविर्भावे किं प्रधानं कारणम् ? किं च सहकारीति सप्रमाणं प्रदर्श्यताम् ।१९

२—दोषसामान्यलक्षणं निरूप्य निहतार्थाऽसमर्थाऽप्रयुक्तानां मिथो भेदं लक्षणो-
दाहरणमुखेन प्रदर्शयत । २०

३—'सुधा निन्दन्ति संसारं कंसारिर्यत्र पूज्यते' ।
केन सञ्जायते शोभा लक्षणेनाऽत्र तद्वद ॥ १९

४—'श्यामला कोमला बाला रमणं शरणं गता' ।
गुणेन केन वागेषा भूषितेत्यभिधीयताम् ॥ १९

५—रूपकात् परिणामस्य भेदकं किं तदुच्यताम् ।
सलक्षणोदाहरणोऽनन्वयोऽपि निगद्यताम् ॥ २०

६—रसाः कियन्तः के चैषां स्थायिनः कति कीदृशाः ।
नामग्राहं सप्रमाणं दर्शयैतत् सविस्तरम् ॥ १९

---

## १९३५

### तृतीयं पत्रम् ।

सूचना—सर्वे प्रश्नाः समानाङ्काः समाधेयाः सविस्तरम् ।
केवलं कारिकोल्लेखो व्यर्थं एवाऽवधार्यताम् ॥

१—यौगिकस्य तु शब्दस्य प्रभेदान् लक्षणानि च ।
निरूप्य खण्डवाक्यस्य लक्षणं च प्रदर्शय ॥

२—सलक्षणोदाहरणमपुष्टार्थं निरूपय ।
को दोषो वद वाक्येऽस्मिन्—'ऐयरुः कुञ्जराः पुरम्' ॥

३—गुणाः कियन्तस्तान् सर्वान् नामग्राहं निरूपय ।
सलक्षणोदाहरणं प्रसादं च प्रदर्शय ॥

४—किमलङ्कारसामान्यलक्षणं ग्रन्थकृन्मतम् ।
'मुखं पद्ममिवाभाती'त्यत्र काऽलङ्कृतिर्भवेत् ॥

५—रीतयः कति ? कान्यासां नामानीति स्फुटं वद ।
सलक्षणोदाहरणां ललितां च निदर्शय ॥

---

१९३६

## तृतीयं पत्रम् ।

सूचना—सर्वे प्रश्नाः समानाङ्काः, तेषु केऽपि पञ्च समाधेयाः ।

१—काव्यलक्षणं निरूप्य निर्दोषेत्यादिविशेषणप्रयोजनमपि प्रतिपाद्यताम् ।

२—दोषसामान्यलक्षणं प्रतिपाद्य

'नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः,

इत्यत्र को दोषः ? कथञ्च तल्लक्षणसमन्वयः ? इति सर्वं विशदीक्रियताम् ।

३—काव्यज्ञापकानि कति लक्षणानि ?

'मुधा निन्दन्ति संसारं कंसारिर्यत्र पूज्यते' ।

अत्र किं नामकं लक्षणम् ? किञ्च तत्स्वरूपम् ?

४—गुणाः कतिविधाः ?

'श्यामला कोमला बाला रमणं शरणं गता'

अत्र को वा गुणः ? किञ्च तल्लक्षणम् ?

५—अपह्नुतिलक्षणमुक्त्वा सोदाहरणान् तद्भेदान् ब्रूत ।

६—'चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम्'

'सखि पश्य गृहारामपरागैरस्मि धूसरा'

अनयोः सलक्षणालंकारौ प्रतिपादनीयौ ।

७—रसस्वरूपं विविच्य वीररसस्य लक्षणमुदाहरणञ्च लिख्यताम् ।

८—रीतयः कतिविधाः ? तासां लक्षणोदाहरणानि लेख्यानि ।



प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

